This PDF you are browsing is in a series of several scanned documents containing the collection of Peerzada Muhammad Ashraf Sahib. b 1958

CV:

Residence: Towheed Abad Bemina, Srinagar

https://www.facebook.com/peerzadamohd.ashraf.16

Former Deputy Director Archives, Archaeology

and Museums Deptt. J&K Govt.

Former State Coordinator National Manuscripts Mission GoI.

Former Registering Officer Antiquities, Jammu and Kashmir Govt.

Former Registar National Records, Jammu and Kashmir Govt.

Worked as Lecturer Arabic in Higher Education Department.

Studied at Aligarh Muslim University.

Lives in Srinagar, Jammu and Kashmir.

From Anantnag.

Peerzada Muhammad Ashraf Sahib has an ancestral Collection of Rare Books and Manuscripts in Sharada, Sanskrit, Persian, Arabic, Urdu, Kashmiri in his Home Town Srinagar.

Besides manuscripts, he also has many rare paintings (60+).

Collectors and Art/Literature  Lovers can contact him if they wish through his facebook page

गी
१

ॐश्रीगणेशायनमः॥ॐअस्यश्रीभगवद्गीतामालामंत्र
स्य॥श्रीभगवान्वेदव्यासऋषिः॥अनुष्टुप्छंदः॥श्रीकृ
ष्णःपरमात्मादेवता॥अशोच्यानन्वशोचस्त्वंप्रज्ञावा
दांश्चभाषसेइतिबीजं॥सर्वधर्मान्परित्यज्यमामेकं
शरणंव्रजेतिशक्तिः॥अहंत्वासर्वपापेभ्योमोक्षयि
ष्यामिमाशुचेतिकीलकं॥नैनंछिंदंतिशस्त्राणिनै

नं दहति पावक इत्यंगुष्ठाभ्यां नमः॥ नचैनं क्लेदयं
त्यापो न शोषयति मारुत इति तर्जनीभ्यां नमः॥ अच्छे
द्योयमदाह्योयमक्लेद्योशोष्य एव चेति मध्यमाभ्यां
नमः॥ नित्यः सर्वगतः स्थाणुरचलोयं सनातन इत्य
नामिकाभ्यां नमः॥ पश्य मे पार्थ रूपाणि शतशो-
थ सहस्रश इति कनिष्ठिकाभ्यां नमः॥ नानावि

१ गी. २

धानि दिव्यानि नानावर्णाकृतीनि चेति करतलकर
पृष्ठाभ्यां नमः॥ इति करन्यासः॥ अथ हृदयादिन्या
सः॥ नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावक इति
हृदयाय नमः॥ न चैनं क्लेदयन्त्यापो न शोषयति मा
रुत इति शिरसे स्वाहा॥ अच्छेद्योऽयमदाह्योऽयम
क्लेद्योऽशोष्य एव चेति शिखायै वषट्॥ नित्यः सर्व

गतः स्थाणुरचलोऽयं सनातन इति कवचाय
हुम्॥ पश्य मे पार्थ रूपाणि शतशोऽथ सह
स्रश इति नेत्रत्रयाय वौषट्॥ नानाविधानि दि
व्यानि नानावर्णाकृतीनि चेति अस्त्राय फट्॥
श्रीकृष्णप्रीत्यर्थे पाठे विनियोगः॥ ॐ पार्थाय
प्रतिबोधितां भगवता नारायणेन स्वयं व्या

सेनग्रथितांपुराणमुनिनामध्येमहाभारतं॥अद्वै
तामृतवर्षिणींभगवतीमष्टादशाध्यायिनी॥अम्ब
त्वामनसादधामिभगवद्गीतेभवद्वेषिणीम्॥१॥न
मोऽस्तुतेव्यासविशालबुद्धेफुल्लारविंदायतपत्रने
त्र॥येनत्वयाभारततैलपूर्णःप्रज्वालितोज्ञानमयः
प्रदीपः॥२॥प्रपन्नपारिजातायतोत्रवेत्रैकपाणये॥

ज्ञानमुद्रायकृष्णायगीतामृतदुहेनमः॥३॥सर्वो
पनिषदोगावोदोग्धागोपालनंदनः॥पार्थोव
त्सःसुधीर्भोक्तादुग्धंगीतामृतंमहत्॥४॥वसुदेव
सुतंदेवंकंसचाणूरमर्दनम्॥देवकीपरमानंदं
कृष्णंवंदेजगद्गुरुम्॥५॥भीष्मद्रोणतटाजयद्रथ
जलागांधारनीलोत्पलाशल्यग्राहवतीकृपेणव

गी ४

ह्नीकर्णेन वेलाकुला ॥ अश्वत्थामविकर्णघोरमक
रा दुर्योधनावर्तिनी सोत्तीर्णा खलु पाण्डवै रणनदी कै
वर्तकः केशवः ॥ ४ ॥ पाराशर्यवचः सरोजममलं गीता
र्थगंधोत्कटं ॥ नानाख्यानककेसरं हरिकथासंबोध
नाबोधितम् ॥ लोके सज्जनषट्पदैरहरहः पेपीयमानं
मुदा ॥ भूयाद्भारतपङ्कजं कलिमलप्रध्वंसिनः श्रेयसे ॥

मूकंकरोतिवाचालंपंगुंलंघयतेगिरिम्॥य
त्कृपातमहंवंदेपरमानंदमाधवम्॥ ॥यंब्रह्मा
वरुणेंद्ररुद्रमरुतःस्तुन्वंतिदिव्यैः॥स्तवैर्वेदैःसां
गपदक्रमोपनिषदैर्गायंतियंसामगाः॥ध्यानाव
स्थिततद्गतेनमनसापश्यंतियंयोगिनोयस्यांतं॥
नविदुःसुरासुरगणादेवायतस्मैनमः॥१॥इतिध्या

नमः॥धृतराष्ट्र उवाच॥धर्मक्षेत्रे कुरुक्षेत्रे समवेता यु
युत्सवः॥मामकाः पांडवाश्चैव किमकुर्वत संजय॥१॥
संजय उवाच॥दृष्ट्वा तु पांडवानीकं व्यूढं दुर्योधनस्त
दा॥आचार्यमुपसंगम्य राजा वचनमब्रवीत्॥२॥प
श्यैतां पांडुपुत्राणामाचार्य महतीं चमूम्॥व्यूढां द्रुप
दपुत्रेण तव शिष्येण धीमता॥३॥अत्र शूरा महेष्वासा

भीमार्जुनसमायुधि॥युयुधानोविराटश्चद्रुपदश्च
महारथः॥४॥धृष्टकेतुश्चेकितानःकाशिराजश्च
वीर्यवान्॥पुरुजित्कुंतिभोजश्चशैब्यश्चनरपुंगवः ॥५॥
युधामन्युश्चविक्रांतउत्तमौजाश्चवीर्यवान्॥सौभ
द्रोद्रौपदेयाश्चसर्वएवमहारथाः॥६॥अस्माकंतु
विशिष्टायेतान्निबोधद्विजोत्तम॥नायकाममसै

गी ८

न्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥७॥ भवान्भीष्मश्च कर्णश्च
कृपश्च समितिंजयः ॥ अश्वत्थामा विकर्णश्च सौमद
त्तिस्तथैव च ॥८॥ अन्ये च बहवः शूरा मदर्थे त्यक्तजीवि
ताः ॥ नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥९॥
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ॥ पर्याप्तं
त्विदमेतेषां बलं भीमाभिरक्षितम् ॥१०॥ अयनेषु च स

वेषुयथाभागमवस्थिताः। भीष्ममेवाभिरक्षंतुभ
वंतः सर्वएवहि ॥११॥ तस्यसंजनयन्हर्षंकुरुवृद्धः
पितामहः। सिंहनादंविनद्योच्चैः शंखंदध्मौप्रताप
वान् ॥१२॥ ततः शंखाश्चभेर्यश्चपणवानकगोमुखाः
सहसैवाभ्यहन्यंतसशब्दस्तुमुलोऽभवत् ॥१३॥ ततः
श्वेतैर्हयैर्युक्तेमहतिस्यंदनेस्थितौ। माधवः पांडव

गी ८

श्चैवदिव्यौषंखौप्रदध्मतुः॥१४॥पांचजन्यंहृषीकेशो
देवदत्तंधनंजयः॥पौंड्रंदध्मौमहाषंखंभीमकर्मा
वृकोदरः॥१५॥अनंतविजयंराजाकुंतीपुत्रोयुधिष्ठिरः॥
नकुलःसहदेवश्चसुघोषमणिपुष्पकौ॥१६॥काश्य
श्चपरमेष्वासःशिखंडीचमहारथः॥धृष्टद्युम्नोविरा
टश्चसात्यकिश्चापराजितः॥१७॥द्रुपदोद्रौपदेयाश्चसर्वे

श्चः पृथिवीपते॥ सौभद्रश्च महाबाहुः शंखान्दध्मुः पृ
थक्पृथक्॥१८॥ स घोषो धार्तराष्ट्राणां हृदयानि व्यदा
रयत्॥ नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन्॥१९॥
अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः॥ प्रवृत्ते श
स्त्रसंपाते धनुरुद्यम्य पांडवः॥२०॥ हृषीकेशं तदा वा
क्यमिदमाह महीपते॥ अर्जुन उवाच॥ सेनयोरुभ

योर्मध्येरथंस्थापयमेऽच्युत॥२१॥यावदेतान्निरीक्षेऽ
हंयोद्धुकामानवस्थितान्॥कैर्मयासहयोद्धव्यमस्मि
न्रणसमुद्यमे॥२२॥योत्स्यमानानवेक्षेऽहंयएतेऽत्रस
मागताः॥धार्तराष्ट्रस्यदुर्बुद्धेर्युद्धेप्रियचिकीर्षवः॥२३॥
संजयउवाच॥एवमुक्तोहृषीकेशोगुडाकेशेनभार
त॥सेनयोरुभयोर्मध्येस्थापयित्वारथोत्तमम्॥२४॥

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् । उवाच पा
र्थ पश्यैतान्समवेतान्कुरूनिति ॥२५॥ तत्रापश्यत्स्थितान्पा
र्थः पितॄनथ पितामहान् । आचार्यान्मातुलान्भ्रा
तॄन्पुत्रान्पौत्रान्सखींस्तथा ॥२६॥ श्वशुरान्सुहृदश्चैव
सेनयोरुभयोरपि । तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धू
नवस्थितान् ॥२७॥ कृपया परयाविष्टो विषीदन्निदम

१ गी ५

ब्रवीत्॥ अर्जुनउवाच॥ दृष्ट्वेमंस्वजनंकृष्णयुयुत्सुंसमु
पस्थितम्॥२८॥ सीदंतिममगात्राणिमुखंचपरिशुष्य
ति॥ वेपथुश्चशरीरेमेरोमहर्षश्चजायते॥२९॥ गांडीवं
स्रंसतेहस्तात्त्वक्चैवपरिदह्यते॥ नचशक्नोम्यवस्थातुं
भ्रमतीवचमेमनः॥३०॥ निमित्तानिचपश्यामिविपरीता
निकेशव॥ नचश्रेयोऽनुपश्यामिहत्वास्वजनमाहवे॥

नकांक्षेविजयंकृष्णनचराज्यंसुखानिच॥ किंनोराज्ये
नगोविंदकिंभोगैर्जीवितेनवा॥ ३२॥ येषामर्थेकांक्षितं
नोराज्यंभोगाःसुखानिच॥ तइमेवस्थितायुद्धेप्राणांस्त्य
क्त्वाधनानिच॥ ३३॥ आचार्याःपितरःपुत्रास्तथैवचपिता
महाः॥ मातुलाःश्वशुराःपौत्राःश्यालाःसंबंधिनस्तथा॥ ३४॥
एतान्नहंतुमिच्छामिघ्नतोपिमधुसूदन॥ अपित्रैलोक्य

१ गी ९

राज्यस्यहेतोःकिंनुमहीकृते॥३५॥निहत्यधार्त्तराष्ट्रान्नःकाप्री
तिःस्याज्जनार्दन॥पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः॥
तस्मान्नार्हावयंहंतुंधार्त्तराष्ट्रान्स्वबांधवान्॥स्वजनंहिकथं
हत्वासुखिनःस्याममाधव॥३६॥यद्यप्येतेनपश्यंतिलोभोप
हतचेतसः॥कुलक्षयकृतंदोषंमित्रद्रोहेचपातकम्॥३७॥
कथंनज्ञेयमस्माभिःपापादस्मान्निवर्तितुम्॥कुलक्षयकृ

𑆤𑆼𑆢𑆾𑆰𑆁𑆥𑇀𑆫𑆥𑆯𑇀𑆪𑆢𑇀𑆨𑆴𑆫𑇀𑆘𑆤𑆳𑆫𑇀𑆢𑆤𑇆𑇓𑇙𑇆𑆑𑆶𑆬𑆑𑇀𑆰𑆪𑆼𑆥𑇀𑆫𑆟𑆯𑇀𑆪𑆤𑇀𑆠𑆴
𑆑𑆶𑆬𑆣𑆫𑇀𑆩𑆳𑆂𑆱𑆤𑆳𑆠𑆤𑆳𑆂𑇅𑆣𑆫𑇀𑆩𑆼𑆤𑆰𑇀𑆛𑆼𑆑𑆶𑆬𑆁𑆑𑆸𑆠𑇀𑆱𑇀𑆤𑆩𑆣𑆫𑇀𑆩𑆾𑇁
𑆨𑆴𑆨𑆮𑆠𑇀𑆪𑆶𑆠𑇆𑇔𑇐𑇆𑆃𑆣𑆫𑇀𑆩𑆳𑆨𑆴𑆨𑆮𑆳𑆠𑇀𑆑𑆸𑆰𑇀𑆟𑆥𑇀𑆫𑆢𑆶𑆰𑇀𑆪𑆤𑇀𑆠𑆴𑆑𑆶𑆬
𑆱𑇀𑆠𑇀𑆫𑆴𑆪𑆂𑇅𑆱𑇀𑆠𑇀𑆫𑆵𑆰𑆶𑆢𑆶𑆰𑇀𑆛𑆳𑆱𑆶𑆮𑆳𑆫𑇀𑆰𑇀𑆟𑆼𑆪𑆘𑆳𑆪𑆠𑆼𑆮𑆫𑇀𑆟𑆱𑆁𑆑𑆫𑆂𑇆𑇔𑇑𑇆𑆱𑆁
𑆑𑆫𑆾𑆤𑆫𑆑𑆳𑆪𑆽𑆮𑆑𑆶𑆬𑆔𑇀𑆤𑆳𑆤𑆳𑆁𑆑𑆶𑆬𑆱𑇀𑆪𑆖𑇅𑆥𑆠𑆤𑇀𑆠𑆴𑆥𑆴𑆠𑆫𑆾
𑆲𑇀𑆪𑆼𑆰𑆳𑆁𑆬𑆶𑆥𑇀𑆠𑆥𑆴𑆟𑇀𑆝𑆾𑆢𑆑𑆑𑇀𑆫𑆴𑆪𑆳𑆂𑇆𑇔𑇒𑇆𑆢𑆾𑆰𑆽𑆫𑆼𑆠𑆽𑆂𑆑𑆶𑆬𑆔𑇀𑆤𑆳𑆤𑆳𑆁

वर्णसंकरकारकैः॥उत्साद्यंतेजातिधर्माःकुलधर्माश्च
शाश्वताः॥४३॥उत्सन्नकुलधर्माणांमनुष्याणांजनार्दन
नरकेनियतंवासोभवतीत्यनुशुश्रुम॥४४॥अहोबतम
हत्पापंकर्तुंव्यवसितावयम्।यद्राज्यसुखलोभेनहंतुं
स्वजनमुद्यताः॥४५॥यदिमामप्रतीकारमशस्त्रंशस्त्र·
पाणयः।धार्तराष्ट्रारणेहन्युस्तन्मेक्षेमतरंभवेत्॥४६॥

संजयउवाच॥एवमुक्त्वाऽर्जुनःसंख्येरथोपस्थउपा
विशत्॥विसृज्यसशरंचापंशोकसंविग्नमानसः॥४७॥
इतिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयो
गशास्त्रेश्रीकृष्णार्जुनसंवादेऽर्जुनविषादयोगोना
मप्रथमोऽध्यायः॥ ॥१॥

संजय उवाच ॥ तं तथा कृपयाविष्टमश्रुपूर्णाकुले
क्षणम् ॥ विषीदन्तमिदं वाक्यमुवाच मधुसूदनः १
श्रीभगवानुवाच ॥ कुतस्त्वा कश्मलमिदं विषमे स
मुपस्थितम् ॥ अनार्यजुष्टमस्वर्ग्यमकीर्तिकरम
र्जुन ॥ २ ॥ क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ॥
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥ अर्जुन उ

गी
२

वाच कथंभीष्ममहंसंख्येद्रोणंचमधुसूदन॥इ
षुभिःप्रतियोत्स्यामिपूजार्हावरिसूदन॥४॥गुरून
हत्वाहिमहानुभावाञ्छ्रेयोभोक्तुंभैक्ष्यमपीहलोके
हत्वार्थकामांस्तुगुरूनिहैवभुंजीयभोगान्रुधिर
प्रदिग्धान्॥५॥नचैतद्विद्मःकतरन्नोगरीयोयद्वाज
येमयदिवानोजयेयुः॥यानेवहत्वानजिजीविषाम

तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः॥६॥ कार्पण्यदो
षोपहतस्वभावः॥ पृच्छामि त्वां धर्मसंमूढचेता
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे॥ शिष्यस्तेऽहं शा
धि मां त्वां प्रपन्नम्॥७॥ न हि प्रपश्यामि ममापनु
द्याद्यच्छोकमुच्छोषणमिंद्रियाणाम्॥ अवाप्य
भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम्॥ ८॥

२ गी २

संजयउवाच॥एवमुक्त्वाहृषीकेशंगुडाकेशःपरंतप
नयोत्स्यइतिगोविंदमुक्त्वातूष्णींबभूवह॥९॥तमुवा
चहृषीकेशःप्रहसन्निवभारत॥सेनयोरुभयोर्मध्ये
विषीदंतमिदंवचः॥१०॥श्रीभगवानुवाच॥अशोच्या
नन्वशोचस्त्वंप्रज्ञावादांश्चभाषसे॥गतासूनगतासूं
श्चनानुशोचंतिपंडिताः॥११॥नत्वेवाहंजातुनासंनत्वं

नेमेजनाधिपाः॥नचैवनभविष्यामःसर्वेवयमतः
परम्॥१२॥देहिनोऽस्मिन्यथादेहेकौमारंयौवनंजरा॥
तथादेहान्तरप्राप्तिर्धीरस्तत्रनमुह्यति॥१३॥मात्रास्प
र्शास्तुकौन्तेयशीतोष्णसुखदुःखदाः॥आगमापायिनो
ऽनित्यास्तांस्तितिक्षस्वभारत॥१४॥यंहिनव्यथयन्त्येते
पुरुषंपुरुषर्षभ॥समदुःखसुखंधीरंसोऽमृतत्वाय

कल्पते ॥१५॥ नासतो विद्यते भावो नाभावो विद्यते सतः । उ
भयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥ अविनाशि
तु तद्विद्धि येन सर्वमिदं ततम् । विनाशमव्ययस्यास्य न क
श्चित्कर्तुमर्हति ॥१७॥ अन्तवन्त इमे देहा नित्यस्योक्ताः शरी
रिणः । अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥१८॥ य
एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् । उभौ तौ न विजानी

तोनायंहंतिनहन्यते॥१९॥नजायतेम्रियतेवाकदा
चिन्नायंभूत्वाभवितावानभूयः॥अजोनित्यःशाश्व
तोऽयंपुराणोनहन्यतेहन्यमानेशरीरे॥२०॥वेदावि
नाशिनंनित्यंयएनमजमव्ययम्॥कथंसपुरुषः
पार्थकंघातयतिहंतिकम्॥२१॥वासांसिजीर्णानिय
थाविहायनवानिगृह्णातिनरोऽपराणि॥तथा

शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि दे
ही॥२२॥ नैनं छिंदंति शस्त्राणि नैनं दहति पावकः॥
न चैनं क्लेदयंत्यापो न शोषयति मारुतः॥२३॥ अच्छेद्यो
ऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च॥ नित्यः सर्वग
तः स्थाणुरचलोऽयं सनातनः॥२४॥ अव्यक्तोऽयमचिं
त्योऽयमविकार्योऽयमुच्यते॥ तस्मादेवं विदित्वैनं

नानुशोचितुमर्हसि ॥२५॥ अथ चैनं नित्यजातं नि
त्यं वा मन्यसे मृतम् । तथापि त्वं महाबाहो नैनं शो
चितुमर्हसि ॥२६॥ जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म
मृतस्य च । तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्ह
सि ॥२७॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥२८॥ आश्च

र्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्य॥ :
श्चाश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव
कश्चित्॥२९॥ देही नित्यमवध्योऽयं देहे सर्वस्य भारत
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि॥३०॥ स्वध
र्ममपि चावेक्ष्य न विकंपितुमर्हसि॥ धर्म्याद्धि युद्धाच्छ्रे
योऽन्यत्क्षत्रियस्य न विद्यते॥३१॥ यदृच्छया चोपपन्नं

स्वर्गद्वारमपावृतम्॥ सुखिनः क्षत्रियाः पार्थ ल
भन्ते युद्धमीदृशम्॥३२॥ अथ चेत्त्वमिमं धर्म्यं संग्रा
मं न करिष्यसि॥ ततः स्वधर्मं कीर्तिं च हित्वा पाप
मवाप्स्यसि॥३३॥ अकीर्तिं चापि भूतानि कथयिष्य
न्ति तेऽव्ययाम्॥ संभावितस्य चाकीर्तिर्मरणादति
रिच्यते॥३४॥ भयाद्रणादुपरतं मंस्यन्ते त्वां महार

याः॥ येषांचत्वंबहुमतोभूत्वायास्यसिलाघवम्॥३५॥ अ
वाच्यवादांश्चबहून्वदिष्यंतितवाहिताः॥ निंदंतस्तवसा
मर्थ्यंततोदुःखतरंनुकिम्॥३६॥ हतोवाप्राप्स्यसिस्वर्गं
जित्वावाभोक्ष्यसेमहीम्॥ तस्मादुत्तिष्ठकौंतेययुद्धाय
कृतनिश्चयः॥३७॥ सुखदुःखेसमेकृत्वालाभालाभौज
याजयौ॥ ततोयुद्धाययुज्यस्वनैवंपापमवाप्स्यसि॥३८॥

एषातेऽभिहितासांख्येबुद्धिर्योगेत्विमांशृणु।बुद्ध्यायुक्तो
ययापार्थकर्मबंधंप्रहास्यसि॥३९॥नेहाभिक्रमनाशोऽ
स्तिप्रत्यवायोनविद्यते।स्वल्पमप्यस्यधर्मस्यत्रायते
महतोभयात्॥४०॥व्यवसायात्मिकाबुद्धिरेकेहकु
रुनंदन।बहुशाखाह्यनंताश्चबुद्धयोऽव्यवसायिनाम्॥४ १९
यामिमांपुष्पितांवाचंप्रवदंत्यविपश्चितः।वेदवादरता :

गी० २७

पार्थ नान्यदस्तीतिवादिनः ॥४२॥ कामात्मानः स्वर्गपरा
जन्मकर्मफलप्रदाम् ॥ क्रियाविशेषबहुलां भोगैश्वर्य
गतिं प्रति ॥४३॥ भोगैश्वर्यप्रसक्तानां तयापहृतचेतसा
म् ॥ व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥४४॥ त्रै
गुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ॥ निर्द्वन्द्वो नित्यस
त्त्वस्थो निर्योगक्षेम आत्मवान् ॥४५॥ यावानर्थ उदपाने स

र्वतःसंप्लुतोदके।तावान्सर्वेषुवेदेषुब्राह्मणस्यविजानतः॥
॥४६॥कर्मण्येवाधिकारस्तेमाफलेषुकदाचन॥माकर्मफ
लहेतुर्भूर्मातेसंगोऽस्त्वकर्मणि॥४७॥योगस्थःकुरुक
र्माणिसंगंत्यक्त्वाधनंजय।सिद्ध्यसिद्ध्योःसमोभूत्वासम
त्वंयोगउच्यते॥४८॥दूरेणह्यवरंकर्मबुद्धियोगाद्धनंजय॥
बुद्धौशरणमन्विच्छकृपणाःफलहेतवः॥४९॥बुद्धियु-

क्तोजहातीहउभेसुकृतदुष्कृते॥तस्माद्योगाययुज्यस्वयो
गःकर्मसुकौशलम्॥५०॥कर्मजंबुद्धियुक्ताहिफलंत्य
क्त्वामनीषिणः॥जन्मबंधविनिर्मुक्ताःपदंगछंत्यनाम
यम्॥५१॥यदातेमोहकलिलंबुद्धिर्व्यतितरिष्यति॥तदा
गंतासिनिर्वेदंश्रोतव्यस्यश्रुतस्यच॥५२॥श्रुतिविप्रति
पन्नातेयदास्थास्यतिनिश्चला॥

[illegible] समाधावचलाबुद्धिस्तदायोगमवाप्स्यसि ॥ ५३॥
अर्जुनउवाच ॥ स्थितप्रज्ञस्यकाभाषासमाधिस्थस्य
केशव ॥ स्थितधीः किंप्रभाषेतकिमासीतव्रजेतकिं ॥ ५ ४॥
प्रजहाति
श्रीभगवानुवाच ॥ यदाकामान्सर्वान्पार्थमनोगतान् ॥
आत्मन्येवात्मनातुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥ दुः
खेष्वनुद्विग्नमनाः सुखेषुविगतस्पृहः ॥ वीतरागभ

२ गी २

यक्रोधः स्थितधीर्मुनिरुच्यते॥५६॥ यः सर्वत्रानभिस्नेह

स्तत्तत्प्राप्यशुभाशुभं॥ नाभिनंदति न द्वेष्टि तस्य प्रज्ञाप्र

तिष्ठिता॥५७॥ यदा संहरते चायं कूर्मोंगानीव सर्वशः

इंद्रियाणींद्रियार्थेभ्यस्तस्य प्रज्ञाप्रतिष्ठिता॥५८॥ वि

षया विनिवर्त्तंते निराहारस्य देहिनः॥ रसवर्जं रसोप्य

स्य परं दृष्ट्वा निवर्त्तते॥५९॥ यततो ह्यपि कौंतेय पुरुष

स्यविपश्चितः।इन्द्रियाणिप्रमाथीनिहरंतिप्रसभं
मनः॥६०॥तानिसर्वाणिसंयम्ययुक्तआसीतमत्परः
वशेहियस्येन्द्रियाणितस्यप्रज्ञाप्रतिष्ठिता॥६१॥
ध्यायतोविषयान्पुंसःसंगस्तेषूपजायते॥संगा-
त्संजायतेकामःकामात्क्रोधोभिजायते॥६२॥क्रो
धाद्भवतिसंमोहःसंमोहात्स्मृतिविभ्रमः।स्मृति

गी
११

भ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति॥६३॥ रागद्वेष
वियुक्तैस्तु विषयानिंद्रियैश्चरन्॥ आत्मवश्यैर्विधेया
त्मा प्रसादमधिगच्छति॥ प्रसादे सर्वदुःखानां हानिर
स्योपजायते॥ प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते॥
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना॥ न चाभाव
यतः शांतिरशांतस्य कुतः सुखं॥६६॥ इंद्रियाणां हि चर

नां यन्मनोनुविधीयते ।। तदस्य हरति प्रज्ञां वायुर्ना·
वमिवांभसि ।। ६७ ।। तस्माद्यस्य महाबाहो निगृहीतानि
सर्वशः ।। इंद्रियाणींद्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।। यस्यां·
जाग्रति भूतानि सा निशा पश्यतो मुनेः ।। ६९ ।। आपूर्य
माणमचलप्रतिष्ठं समुद्रमापः प्रविशंति यद्वत् ।।

२ तद्वत्कामायंप्रविशंतिसर्वेसशांतिमाप्नोतिन
गी कामकामी ॥ ७० ॥ विहायकामान्यःसर्वान्पुमांश्च
२२ रतिनिःस्पृहः ॥ निर्ममोनिरहंकारःसशांतिमधिग
च्छति ॥ ७१ ॥ एषाब्राह्मीस्थितिःपार्थनैनांप्राप्यविमु
ह्यति ॥ स्थित्वास्यामंतकालेपिब्रह्मनिर्वाणमृच्छ
ति ॥ ७२ ॥ इतिश्रीभगवद्गीतासूपनिषत्सुब्रह्मवि

द्यायांयोगशास्त्रेश्रीकृष्णाऽर्जुनसंवादेसांख्य·
योगोनामद्वितीयोध्यायः॥२॥ ॥

अर्जुनउवाच । ज्यायसीचेत्कर्मणस्तेमताबुद्धिर्जनार्द
न । तत्किंकर्मणिघोरेमांनियोजयसिकेशव ॥१॥ व्यामि
श्रेणेववाक्येनबुद्धिंमोहयसीवमे । तदेकंवदनिश्चित्य
येनश्रेयोऽहमाप्नुयाम् ॥२॥ श्रीभगवानुवाच । लोकेऽस्मि
न्द्विविधानिष्ठापुराप्रोक्तामयानघ । ज्ञानयोगेनसां
ख्यानांकर्मयोगेनयोगिनाम् ॥३॥ नकर्मणामनारंभान्नै

३ गी ९

कर्म्म पुरुषोऽश्नुते॥ न च संन्यसनादेव सिद्धिं समधि
गच्छति॥४॥ न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्म
कृत्॥ कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥५॥
कर्मेंद्रियाणि संयम्य य आस्ते मनसा स्मरन्॥ इंद्रि·
यार्थान्विमूढात्मा मिथ्याचारः स उच्यते॥६॥ यस्त्विंद्रि
याणि मनसा नियम्यारभतेऽर्जुन॥ कर्मेंद्रियैः कर्मयो

गमसक्तः स विशिष्यते॥ नियतं कुरु कर्म त्वं कर्म
ज्यायो ह्यकर्मणः॥ शरीरयात्रापि च ते न प्रसिद्ध्ये
दकर्मणः॥८॥ यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं क
र्मबंधनः॥ तदर्थं कर्म कौंतेय मुक्तसंगः समाचर॥ ९॥
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः॥ अनेन
प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥१०॥ देवान्भा

३ गी २

वयतानेनतेदेवाभावयंतुवः॥परस्परंभावयंतःश्रे
यःपरमवाप्स्यथ॥११॥इष्टान्भोगान्हिवोदेवादास्यंते
यज्ञभाविताः॥तैर्दत्तानप्रदायैभ्योयोभुंक्तेस्तेनएव
सः॥१२॥यज्ञशिष्टाशिनःसंतोमुच्यंतेसर्वकिल्बिषैः॥
भुंजतेतेत्वघंपापायेपचंत्यात्मकारणात्॥१३॥अन्ना
द्भवंतिभूतानिपर्जन्यादन्नसंभवः॥यज्ञाद्भवतिप

र्जन्योयज्ञःकर्मसमुद्भवः॥१४॥कर्मब्रह्मोद्भवंविद्धि
ब्रह्माक्षरसमुद्भवं॥तस्मात्सर्वगतंब्रह्मनित्यंयज्ञे
प्रतिष्ठितं॥१५॥एवंप्रवर्तितंचक्रंनानुवर्तयतीहयः॥
अघायुरिंद्रियारामोमोघंपार्थसजीवति॥१६॥यस्त्वा
त्मरतिरेवस्यादात्मतृप्तश्चमानवः॥आत्मन्येवच
संतुष्टस्तस्यकार्यंनविद्यते॥१७॥नैवतस्यकृतेना

भ
गी
३

र्थोनाकृतेनेहकश्चन।नचास्यसर्वभूतेषुकश्चिदर्थ
व्यपाश्रयः॥तस्मादसक्तःसततंकार्यंकर्मसमाचर॥
असक्तोह्याचरन्कर्मपरमाप्नोतिपूरुषः॥१९॥कर्मणै
वहिसंसिद्धिमास्थिताजनकादयः।लोकसंग्रहमे
वापिसंपश्यन्कर्तुमर्हसि॥२०॥यद्यदाचरतिश्रेष्ठस्त
तदेवेतरोजनः।सयत्प्रमाणंकुरुतेलोकस्तदनुव

र्त्तते ॥२१॥ नमेपार्थास्तिकर्त्तव्यंत्रिषुलोकेषुकिंचन ।
नानवाप्तमवाप्तव्यंवर्त्तएवचकर्मणि ॥२२॥ यदिह्य
हंनवर्त्तेयंजातुकर्मण्यतन्द्रितः ॥ ममवर्त्मानुवर्त्त
न्तेमनुष्याःपार्थसर्वशः ॥ उत्सीदेयुरिमेलोकानकु
र्यांकर्मचेदहं ॥ संकरस्यचकर्त्तास्यामुपहन्यामिमाः
प्रजाः ॥२४॥ सक्ताःकर्मण्यविद्वांसोयथाकुर्वंतिभार

३ गी ४

त॥ कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहं॥ नबु
द्धिभेदंजनयेदज्ञानांकर्मसंगिनां॥ जोषयेत्सर्वक·
र्माणिविद्वान्युक्तः समाचरन्॥२६॥ प्रकृतेः क्रियमा·
णानिगुणैःकर्माणिसर्वशः॥ अहंकारविमूढात्मा
कर्ताहमितिमन्यते॥२७॥ तत्त्ववित्तुमहाबाहोगुण
कर्मविभागयोः॥ गुणागुणेषुवर्त्तंतइतिमत्वानसज्ज

ते ॥२८॥ प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ॥
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥२९॥
मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ॥ नि
राशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३०॥ ये मे
मतमिमं नित्यमनुतिष्ठन्ति मानवाः ॥ श्रद्धावन्तोन
सूयन्तो मुच्यन्ते तेपि कर्मभिः ॥३१॥ येत्वेतद भ्यसूय

३ गी ५

तोनानुतिष्ठंतिमेमतं॥सर्वज्ञानविमूढांस्तान्वि
द्धिनष्टानचेतसः॥३२॥सदृशंचेष्टतेस्वस्याःप्रकृते
र्ज्ञानवानपि॥प्रकृतिंयांतिभूतानिनिग्रहःकिंक
रिष्यति॥३३॥इंद्रियस्येंद्रियस्यार्थेरागद्वेषौव्यवस्थि
तौ॥तयोर्नवशमागच्छेत्तौह्यस्यपरिपंथिनौ॥३४॥
श्रेयान्स्वधर्मोविगुणःपरधर्मात्स्वनुष्ठितात्॥स्वध

र्मेनिधनंश्रेयःपरधर्मोभयावहः॥३५॥अर्जुनउ
वाच॥अथकेनप्रयुक्तोयंपापंचरतिपूरुषः॥अ
निच्छन्नपिवार्ष्णेयबलादिवनियोजितः॥३६॥श्री
भगवानुवाच॥कामएषक्रोधएषरजोगुणसमु
द्भवः॥महाशनोमहापाप्माविद्ध्येनमिहवैरिणं॥ २७
धूमेनाव्रियतेवह्निर्यथादर्शोमलेनच॥यथोल्बे

३ गी ८

नावृतो गर्भस्तथा तेनेदमावृतम्॥३८॥ आवृतं ज्ञानमे
तेन ज्ञानिनो नित्यवैरिणा॥ कामरूपेण कौन्तेय दुष्पू
रेणानलेन च॥३९॥ इन्द्रियाणि मनो बुद्धिरस्याधिष्ठान
मुच्यते॥ एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनं॥४०॥
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ॥ पाप्मानं
प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्॥४१॥ इंद्रियाणि प

राण्याहुरिंद्रियेभ्यः परं मनः॥ मनसस्तु परा बुद्धिर्यो
बुद्धेः परतस्तु सः॥४२॥ एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मान
मात्मना॥ जहि शत्रुं महाबाहो कामरूपं दुरासदं॥४३॥
इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशा
स्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम तृतीयोऽध्यायः
॥ ॥३॥ ॥

श्रीभगवानुवाच॥ ओंइमंविवस्वतेयोगंप्रोक्तवा
नहमव्ययं॥ विवस्वान्मनवेप्राहमनुरिक्ष्वाकवे
ब्रवीत्॥१॥ एवंपरंपराप्राप्तमिमंराजर्षयोविदुः॥
सकालेनेहमहतायोगोनष्टःपरंतप॥२॥ सएवा
यंमयातेद्ययोगःप्रोक्तःपुरातनः॥ भक्तोसिमेस
खाचेतिरहस्यंह्येतदुत्तमं॥३॥ अर्जुनउवाच॥ अपरं

भवतोजन्मपरंजन्मविवस्वतः।कथमेतद्विजानीयां·
त्वमादौप्रोक्तवानिति॥४॥श्रीभगवानुवाच।बहूनिमेव्य
तीतानिजन्मानितवचार्जुन।तान्यहंवेदसर्वाणिन
त्वंवेत्थपरंतप।अजोपिसन्नव्ययात्माभूतानामीश्वरो
पिसन्।प्रकृतिंस्वामधिष्ठायसंभवाम्यात्ममायया॥६॥
यदायदाहिधर्मस्यग्लानिर्भवतिभारत।अभ्युत्थानम

धर्मस्यतदात्मानंसृजाम्यहं॥७॥परित्राणायसाधूनां
विनाशायचदुष्कृतां॥धर्मसंस्थापनार्थायसंभवामि
युगेयुगे॥जन्मकर्मचमेदिव्यमेवंयोवेत्तितत्वतः॥त्य
क्त्वादेहंपुनर्जन्मनैतिमामेतिसोर्जुन॥९॥वीतरागभ
यक्रोधामन्मयामामुपाश्रिताः॥बहवोज्ञानतपसा
पूतामद्भावमागताः॥१०॥येयथामांप्रपद्यंतेतांस्तथै

जं



४ गी २

वभजाम्यहं ॥ मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः ॥११॥
कांक्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ॥ क्षिप्रं हि मानुषे
लोके सिद्धिर्भवति कर्मजा ॥१२॥ चातुर्वर्ण्यं मया सृष्टं गुण
कर्मविभागशः ॥ तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययं
न मां कर्माणि लिंपन्ति न मे कर्मफले स्पृहा ॥ इति मां योभि
जानाति कर्मभिर्न स बध्यते ॥१४॥ एवं ज्ञात्वा कृतं कर्म पूर्वै

रपिमुमुक्षुभिः॥ कुरुकर्मैवतस्मात्त्वंपूर्वैःपूर्वतरंकृतं॥ १५॥
किंकर्मकिमकर्मेतिकवयोप्यत्रमोहिताः॥ तत्तेकर्म
प्रवक्ष्यामियज्ज्ञात्वामोक्ष्यसेऽशुभात्॥१६॥ कर्मणोह्य
पिबोद्धव्यंबोद्धव्यंचविकर्मणः॥ अकर्मणश्चबोद्धव्यंग
हनाकर्मणोगतिः॥१७॥ कर्मण्यकर्मयःपश्येदकर्म
णिचकर्मयः॥ सबुद्धिमान्मनुष्येषुसयुक्तःकृत्स्नक

र्मकृत्॥ यस्यसर्वेसमारंभाःकामसंकल्पवर्जिताः॥
ज्ञानाग्निदग्धकर्माणंतमाहुःपंडितंबुधाः॥१९॥त्य
क्त्वाकर्मफलासंगंनित्यतृप्तोनिराश्रयः॥कर्मण्यभि
प्रवृत्तोपिनैवकिंचित्करोतिसः॥२०॥निराशीर्यतचि
त्तात्मात्यक्तसर्वपरिग्रहः॥शारीरंकेवलंकर्मकुर्व
न्नाप्नोतिकिल्बिषं॥२१॥यदृच्छालाभसंतुष्टोद्वंद्वाती

नो विमत्सरः। समः सिद्धावसिद्धौ च कृत्वापि न
निबध्यते ॥२२॥ गतसंगस्य मुक्तस्य ज्ञानावस्थितचे
तसः। यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥२३॥
ब्रह्मार्पणं ब्रह्म हविः ब्रह्माग्नौ ब्रह्मणा हुतं। ब्रह्मै
व तेन गंतव्यं ब्रह्मकर्मसमाधिना ॥२४॥ दैवमेवा
परे यज्ञं योगिनः पर्युपासते। ब्रह्माग्नावपरे यज्ञं

प गी अ

यज्ञेनैवोपजुह्वति॥२५॥श्रोत्रादीनींद्रियाण्यन्येसं
यमाग्निषुजुह्वति।शब्दादीन्विषयानन्यइंद्रियाग्नि
षुजुह्वति॥२६॥सर्वाणींद्रियकर्माणिप्राणकर्माणि
चापरे।आत्मसंयमयोगाग्नौजुह्वतिज्ञानदीपिते॥
द्रव्ययज्ञास्तपोयज्ञायोगयज्ञास्तथापरे।स्वाध्याय
ज्ञानयज्ञश्चयतयःसंशितव्रताः॥२८॥अपानेजु

ह्वति प्राणं प्राणेऽपानं तथापरे ॥ प्राणापानगती रु-
द्ध्वा प्राणायामपरायणाः ॥ अपरे नियताहाराः प्रा-
णान्प्राणेषु जुह्वति ॥ सर्वेऽप्येते यज्ञविदो यज्ञक्ष-
पितकल्मषाः ॥ ३० ॥ यज्ञशिष्टामृतभुजो यान्ति ब्रह्म
सनातनं ॥ नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरु-
सत्तम ॥ ३१ ॥ एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे

कर्मजान्विद्धितान्सर्वानेवंज्ञात्वाविमोक्ष्यसे॥३२॥
श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप॥सर्वंक
र्माखिलंपार्थज्ञानेपरिसमाप्यते॥३३॥तद्विद्धिप्र
णिपातेनपरिप्रश्नेनसेवया॥उपदेक्ष्यन्तितेज्ञानं
ज्ञानिनस्तत्त्वदर्शिनः॥३४॥यज्ज्ञात्वानपुनर्मोहमे
वंयास्यसिपाण्डव॥येनभूतान्यशेषेण द्रक्ष्यस्यात्म

न्यथो मयि॥३५॥ अपि चेदसि पापेभ्यः सर्वेभ्यः पाप
कृत्तमः॥ सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि॥३६॥ ८॥
यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन॥ ज्ञानाग्नि
सर्वकर्माणि भस्मसात्कुरुते तथा॥ न हि ज्ञानेन सदृ
शं पवित्रमिह विद्यते॥ तत्स्वयं योगसंसिद्धः कालेना
त्मनि विन्दति॥३८॥ श्रद्धावांल्लभते ज्ञानं तत्परः संय

नेंद्रियः ज्ञानं लब्ध्वा परां शांतिमचिरेणाधिगच्छति॥३
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति॥ नायं लो
कोस्ति न परो न सुखं संशयात्मनः॥४०॥ योगसंन्यस्तक
र्माणं ज्ञानसंछिन्नसंशयं॥ आत्मवंतं न कर्माणि निब
ध्नंति धनंजय॥ तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्म
नः॥ छित्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत॥४२॥ इति श्री

भगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्री
कृष्णार्जुनसंवादेकर्मसंन्यासयोगोनामचतुर्थोऽ
ध्यायः॥ ॥॥ ४॥ ॥॥

अर्जुन उवाच ॥ ॐ संन्यासं कर्मणां कृष्ण पुनर्योगं च
शंससि । यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितं ॥ १॥
श्रीभगवानुवाच ॥ ॐ संन्यासः कर्मयोगश्च निःश्रे
यसकरावुभौ । तयोस्तु कर्मसंन्यासात्कर्मयोगो
विशिष्यते ॥ २ ॥ ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न
कांक्षति । निर्द्वन्द्वो हि महाबाहो सुखं बंधात्प्रमुच्यते ॥ ३॥

५ गी १

सांख्ययोगौपृथग्वालाःप्रवदंतिनपंडिताः॥एकमप्या
स्थितःसम्यगुभयोर्विंदतेफलं॥४॥यत्सांख्यैःप्राप्यतेस्था
नंतद्योगैरपिगम्यते॥एकंसांख्यंचयोगंचयःपश्यतिस
पश्यति॥५॥संन्यासस्तुमहाबाहोदुःखमाप्तुमयोगतः॥
योगयुक्तोमुनिर्ब्रह्मनचिरेणाधिगच्छति॥६॥योगयुक्तो
विशुद्धात्माविजितात्माजितेंद्रियः॥सर्वभूतात्मभूतात्मा

ऊर्वन्नपि न लिप्यते ॥७॥ नैव किंचित्करोमीति युक्तो म
न्येत तत्त्ववित् ॥ पश्यन्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्व
सन् ॥ प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ॥ इंद्रि
याणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥८॥ ब्रह्मण्याधा
य कर्माणि संगं त्यक्त्वा करोति यः ॥ लिप्यते न स पापेन
पद्मपत्रमिवाम्भसा ॥९॥ कायेन मनसा बुद्ध्या केवलै

५ गी २

रिंद्रियैरपि॥ योगिनः कर्मकुर्वंति संगंत्यक्त्वात्मशुद्ध
ये॥ युक्तःकर्मफलंत्यक्त्वाशांतिमाप्नोतिनैष्ठिकीम्॥ अ
युक्तःकामकारेणफलेसक्तोनिबध्यते॥१२॥ सर्वकर्मा
णिमनसासंन्यस्यास्तेसुखंवशी॥ नवद्वारेपुरेदेही
नैवकुर्वन्नकारयन्॥१३॥ नकर्तृत्वंनकर्माणिलोक
स्यसृजतिप्रभुः॥ नकर्मफलसंयोगंस्वभावस्तुप्रव

र्तते ॥१४॥ नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ॥
अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतवः ॥१५॥ ज्ञाने·
न तु तदज्ञानं येषां नाशितमात्मनः ॥ तेषामादित्य
वज्ज्ञानं प्रकाशयति तत्परं ॥१६॥ तद्बुद्धयस्तदात्मा
नस्तन्निष्ठास्तत्परायणाः ॥ गच्छंत्यपुनरावृत्तिं ज्ञा
ननिर्धूतकल्मषाः ॥१७॥ विद्याविनयसंपन्ने ब्राह्म

५ गी ३

णे गवि हस्तिनि ॥ शुनि चैव श्वपाके च पंडिताः स
मदर्शिनः ॥१८॥ इहैव तैर्जितः सर्गो येषां साम्ये स्थि
तं मनः ॥ निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थि
ताः ॥१९॥ न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रि
यं ॥ स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥
वाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखं ॥ स

ब्रह्मयोगयुक्तात्मासुखमक्षयमश्नुते॥२१॥ये
हिसंस्पर्शजाभोगादुःखयोनयएवते॥आद्यं
तवंतःकौंतेयनतेषुरमतेबुधः॥२२॥शक्नोतीहै
वयःसोढुंप्राक्शरीरविमोक्षणात्॥कामक्रोधो
द्भवंवेगंसयुक्तःससुखीनरः॥२३॥योंतःसुखोंत
रारामःतथांतर्ज्योतिरेवयः॥सयोगीब्रह्मनिर्वा

गी ५

णंब्रह्मभूतोधिगच्छति॥२४॥लभन्तेब्रह्मनिर्वाण
मृषयःक्षीणकल्मषाः॥छिन्नद्वैधायतात्मानःस
र्वभूतहितेरताः॥२५॥कामक्रोधवियुक्तानांयती
नांयतचेतसां॥अभितोब्रह्मनिर्वाणंवर्ततेविदि
तात्मनाम्॥२६॥स्पर्शान्कृत्वाबहिर्बाह्यांश्चक्षुश्चैवां
तरेभ्रुवोः॥प्राणापानौसमौकृत्वानासाभ्यंतरचारि

णौ ॥२७॥ यतेंद्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥२८॥ भोक्तारं य
ज्ञतपसां सर्वलोकमहेश्वरम् ॥ सुहृदं सर्वभूतानां
ज्ञात्वा मां शांतिमृच्छति ॥२९॥ इति श्रीभगवद्गीतासू
पनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जु
नसंवादे संन्यासयोगो नाम पंचमोऽध्यायः ॥५॥

श्रीभगवानुवाच॥अनाश्रितःकर्मफलंकार्यंकर्मक
रोतियः॥ससंन्यासीचयोगीचननिरग्निर्नचाक्रियः॥१॥
यंसंन्यासमितिप्राहुर्योगंतंविद्धिपांडव॥नह्यसंन्यस्त
संकल्पोयोगीभवतिकश्चन॥२॥आरुरुक्षोर्मुनेर्योगंक
र्मकारणमुच्यते॥योगारूढस्यतस्यैवशमःकारणमु
च्यते॥३॥यदाहिनेंद्रियार्थेषुनकर्मस्वनुषज्जते॥सर्वसं

६ कल्पसंन्यासीयोगारूढस्तदोच्यते॥४॥उद्धरेदात्मना
गी त्मानंनात्मानमवसादयेत्॥आत्मैवह्यात्मनोबंधुरा
१ त्मैवरिपुरात्मनः॥५॥बंधुरात्मात्मनस्तस्ययेनात्मैवा
त्मनाजितः॥अनात्मनस्तुशत्रुत्वेवर्तेतात्मैवशत्रुवत्॥
जितात्मनःप्रशांतस्यपरमात्मासमाहितः॥शीतोष्ण
सुखदुःखेषुतथामानापमानयोः॥७॥ज्ञानविज्ञान

प्तात्मा कूटस्थो विजितेंद्रियः॥ युक्त इत्युच्यते योगी
समलोष्टाश्मकांचनः॥८॥ सुहृन्मित्रार्युदासीनम
ध्यस्थद्वेष्यबंधुषु॥ साधुष्वपि च पापेषु समबुद्धिर्वि
शिष्यते॥९॥ योगी युंजीत सततमात्मानं रहसि स्थित
एकाकी यतचित्तात्मा निराशीरपरिग्रहः॥१०॥ शुचौ
देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः॥ नात्युच्छ्रितं

९ नातिनीचंचैलाजिनकुशोत्तरम्॥११॥तत्रैकाग्रंमनः
गी कृत्वायतचित्तेंद्रियक्रियः॥उपविश्यासनेयुंज्याद्यो
२ गमात्मविशुद्धये॥१२॥समंकायशिरोग्रीवंधारयन्न
चलंस्थिरः॥संप्रेक्ष्यनासिकाग्रंस्वंदिशश्चानवलो
कयन्॥१३॥प्रशांतात्माविगतभीर्ब्रह्मचारिव्रतेस्थि
तः॥मनःसंयम्यमच्चित्तोयुक्तआसीतमत्परः॥१४॥

युंजन्नेवंसदात्मानंयोगीनियतमानसः।शांतिंनि
र्वाणपरमांमत्संस्थामधिगच्छति॥१५॥नात्यश्नत
स्तुयोगोस्तिनचैकांतमनश्नतः।नचातिस्वप्नशी
लस्यजाग्रतोनैवचार्जुन॥१६॥युक्ताहारविहारस्य
युक्तचेष्टस्यकर्मसु।युक्तस्वप्नावबोधस्ययोगोभव
तिदुःखहा॥१७॥यदाविनियतंचित्तमात्मन्येवावति

ष्ठते॥ निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा॥१८॥ यथा
दीपो निवातस्थो नेंगते सोपमा स्मृता॥ योगिनो यतचि
त्तस्य युंजतो योगमात्मनः॥१९॥ यत्रोपरमते चित्तं निरु
द्धं योगसेवया॥ यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्य
ति॥२०॥ सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम्॥ वे
त्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः॥२१॥ यं लब्ध्वा चापरं

लाभं मन्यते नाधिकं ततः॥ यस्मिन्स्थितो न दुःखेन
गुरुणापि विचाल्यते॥२२॥ तं विद्याद्दुःखसंयोगवि
योगं योगसंज्ञितं॥ स निश्चयेन योक्तव्यो योगोऽनिर्वि
ण्णचेतसा॥२३॥ संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वान-
शेषतः॥ मनसैवेंद्रियग्रामं विनियम्य समंततः॥२ ४॥
शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया॥ आत्मसंस्थं

९
गी
४

मनः कृत्वा न किंचिदपि चिंतयेत् ॥ यतो यतो निश्चरति
मनश्चंचलमस्थिरं ॥ ततस्ततो नियम्यैतदात्मन्येव वशं
नयेत् ॥ २६ ॥ प्रशांतमनसं ह्येनं योगिनं सुखमुत्तमम् ॥
उपैति शांतरजसं ब्रह्मभूतमकल्मषं ॥ २७ ॥ युंजन्नेवं स
दात्मानं योगी विगतकल्मषः ॥ सुखेन ब्रह्मसंस्पर्शम
त्यंतं सुखमश्नुते ॥ २८ ॥ सर्वभूतस्थमात्मानं सर्वभूतानि

चात्मनि॥ ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥२९॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति॥ तस्याहं न
प्रणश्यामि स च मे न प्रणश्यति॥३०॥ सर्वभूतस्थितं यो
मां भजत्येकत्वमास्थितः॥ सर्वथा वर्तमानोपि स योगी
मयि वर्तते॥३१॥ आत्मौपम्येन सर्वत्र समं पश्यति यो
र्जुन॥ सुखं वा यदि वा दुःखं स योगी परमो मतः॥३२॥

अर्जुन उवाच ॥ योयंयोगस्त्वयाप्रोक्तः साम्येनमधुसूदन
एतस्याहंनपश्यामिचंचलत्वात्स्थितिंस्थिरां ॥३३॥ चंच
लंहिमनःकृष्णप्रमाथिबलवदृढं ॥ तस्याहंनिग्रहंम
न्येवायोरिवसुदुष्करं ॥३४॥ श्रीभगवानुवाच ॥ असंशयं
महाबाहोमनोदुर्निग्रहंचलम् ॥ अभ्यासेनतुकौंतेयवै
राग्येणचगृह्यते ॥३५॥ असंयतात्मनोयोगोदुष्प्रापइ

तिमेमतिः॥वश्यात्मनातुयततांशक्योवाप्तुमुपायतः॥ ३६॥
अर्जुनउवाच॥अयतिःश्रद्धयोपेतोयोगाच्चलितमानसः॥
अप्राप्ययोगसंसिद्धिंकांगतिंकृष्णगच्छति॥३७॥कच्चिन्नो
भयविभ्रष्टश्छिन्नाभ्रमिवनश्यति॥अप्रतिष्ठोमहाबाहो
विमूढोब्रह्मणःपथि॥३८॥एतन्मेसंशयंकृष्णछेत्तुमर्ह
स्यशेषतः॥त्वदन्यःसंशयस्यास्यछेत्तानह्युपपद्यते॥३ ९॥

६
गी
९

श्रीभगवानुवाच । पार्थनैवेहनामुत्रविनाशस्तस्य
विद्यते ॥ नहिकल्याणकृत्कश्चिद्दुर्गतिंतातगच्छति ॥४०॥
प्राप्यपुण्यकृताल्लोकानुषित्वाशाश्वतीःसमाः । शु
चीनांश्रीमतांगेहेयोगभ्रष्टोभिजायते ॥४१॥ अथवायोगि
नामेवकुलेभवतिधीमतां । एतद्धिदुर्लभतरंलोके
जन्मयदीदृशं ॥४२॥ तत्रतंबुद्धिसंयोगंलभतेपौर्वदे

हिकं॥यततेचततोभूयःसंसिद्धौकुरुनंदन॥४३॥
पूर्वाभ्यासेनतेनैवह्रियतेह्यवशोपिसन्॥जिज्ञा
सुरपियोगस्यशब्दब्रह्मातिवर्त्तते॥४४॥प्रयत्नाद्य
तमानस्तुयोगीसंशुद्धकिल्बिषः॥अनेकजन्मसंसि
द्धस्ततोयातिपरांगतिं॥४५॥तपस्विभ्योधिकोयोगी
ज्ञानिभ्योपिमतोधिकः॥कर्मिभ्यश्चाधिकोयोगीतस्मा

६ गी ७

योगीभवार्जुन॥४६॥योगिनामपिसर्वेषांमद्गतेनांत
रात्मना॥श्रद्धावान्भजतेयोमांसमेयुक्ततमोमतः
॥४७॥इतिश्रीभगवद्गीतासूपनिषत्सुब्रह्मविद्या
यांयोगशास्त्रेश्रीकृष्णार्जुनसंवादेआत्मसंयम
योनामषष्ठोऽध्यायः॥६॥ ॥

श्रीभगवानुवाच॥ओंमय्यासक्तमनाःपार्थयोगंयुंज
न्मदाश्रयः॥असंशयंसमग्रंमांयथाज्ञास्यसितच्छृ·
णु॥१॥ज्ञानंतेहंसविज्ञानमिदंवक्ष्याम्यशेषतः॥य·
ज्ज्ञात्वानेहभूयोन्यज्ज्ञातव्यमवशिष्यते॥२॥मनुष्याणां
सहस्रेषुकश्चिद्यततिसिद्धये॥यततामपिसिद्धानां
कश्चिन्मांवेत्तितत्त्वतः॥३॥भूमिरापोनलोवायुःखंम

गी १

नोबुद्धिरेवच। अहंकारइतीयंमेभिन्नाप्रकृतिरष्टधा
अपरेयमितस्त्वन्यांप्रकृतिंविद्धिमेपरां। जीवभूतां
महाबाहोययेदंधार्यतेजगत। ५। एतद्योनीनिभू·
तानिसर्वाणीत्युपधारय। अहंकृत्स्नस्यजगतःप्रभ
वःप्रलयस्तथा। मत्तःपरतरंनान्यत्किंचिदस्तिधनं
जय। मयिसर्वमिदंप्रोतंसूत्रेमणिगणाइव॥७॥र

सोहमप्सुकौंतेयप्रभास्मिशशिसूर्ययोः॥प्रणवः
सर्ववेदेषुशब्दःखेपौरुषंनृषु॥८॥पुण्योगंधःपृ
थिव्यांचतेजश्चास्मिविभावसौ॥जीवनंसर्वभूतेषु
तपश्चास्मितपस्विषु॥९॥बीजंमांसर्वभूतानांविद्धि
पार्थसनातनं॥बुद्धिर्बुद्धिमतामस्मितेजस्तेजस्वि
नामहम्॥१०॥बलंबलवतामस्मिकामरागविवर्जि

गी
२

तेधर्माविरुद्धोभूतेषुकामोस्मिभरतर्षभ॥११॥येचैवसा
त्त्विकाभावाराजसास्तामसाश्चये॥मत्तएवेतितान्विद्धिन
त्वहंतेषुतेमयि॥१२॥त्रिभिर्गुणमयैर्भावैरेभिःसर्वमिदं
जगत्॥मोहितंनाभिजानातिमामेभ्यःपरमव्ययं॥दैवी
ह्येषागुणमयीममामायादुरत्यया॥मामेवयेप्रपद्यं
तेमायामेतांतरंतिते॥१४॥नमांदुष्कृतिनोमूढाःप्रप

यंतेनराधमाः॥मायया पहृतज्ञानाआसुरंभावमा
श्रिताः॥चतुर्विधाभजन्तेमांजनाःसुकृतिनोर्जुन॥
आर्तोजिज्ञासुरर्थार्थीज्ञानीचभरतर्षभ॥तेषांज्ञानी
नित्ययुक्तएकभक्तिर्विशिष्यते॥प्रियोहिज्ञानिनोत्य
र्थमहंसचममप्रियः॥१७॥उदाराःसर्वएवैतेज्ञानी·
त्वात्मैवमेमतं॥आस्थितःसहियुक्तात्मामामेवानुत्त

७ गी ३

मां गतिं ॥१८॥ बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥१९॥ कामैस्तै
स्तैर्हृतज्ञानाः प्रपद्यंतेऽन्यदेवताः ॥ तं तं नियममास्थाय
प्रकृत्या नियताः स्वया ॥२०॥ यो यो यां यां तनुं भक्तः श्रद्धया
र्चितुमिच्छति ॥ तस्य तस्याचलां श्रद्धां तामेव विदधाम्य
हं ॥२१॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते ॥ लभते

चततःकामान्मयैवविहितान्हितान्॥अंतवत्तुफ·
लंतेषांतद्भवत्यल्पमेधसां॥देवान्देवयजोयांतिम
द्भक्तायांतिमामपि॥२३॥अव्यक्तंव्यक्तिमापन्नंमन्यंते
मामबुद्धयः॥परंभावमजानंतोममाव्ययमनुत्तमं॥ २४॥
नाहंप्रकाशःसर्वस्ययोगमायासमावृतः॥मूढोयं
नाभिजानातिलोकोमामजमव्ययं॥२५॥वेदाहंसम

७ गी ४

तीतानिवर्तमानानिचार्जुन ॥ भविष्याणिचभूतानिमां
तुवेदनकश्चन ॥ इच्छाद्वेषसमुत्थेनद्वंद्वमोहेनभारत ॥
सर्वभूतानिसंमोहंसर्गेयांतिपरंतप ॥ २७ ॥ येषांत्वंतगतं
पापंजनानांपुण्यकर्मणां ॥ तेद्वंद्वमोहनिर्मुक्ताभजंते
मांदृढव्रताः ॥ २८ ॥ जरामरणमोक्षायमामाश्रित्ययतंति
ये ॥ तेब्रह्मतद्विदुःकृत्स्नमध्यात्मंकर्मचाखिलं ॥ २९ ॥ साधि

भूताधिदैवंमांसाधियज्ञंचयेविदुः॥प्रयाणकालेपि
चमांतेविदुर्युक्तचेतसः॥३०॥इतिश्रीभगवद्गीतासूप
निषत्सुब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जुनसंवा
देज्ञानविज्ञानयोगोनामसप्तमोऽध्यायः॥७॥

अर्जुनउवाच॥ॐकिंतद्ब्रह्मकिमध्यात्मंकिंकर्मपुरु
षोत्तम॥अधिभूतंचकिंप्रोक्तमधिदैवंकिमुच्यते॥१॥
अधियज्ञःकथंकोत्रदेहेस्मिन्मधुसूदन॥प्रयाणका
लेचकथंज्ञेयोसिनियतात्मभिः॥२॥श्रीभगवानुवाच
अक्षरंब्रह्मपरमंस्वभावोध्यात्ममुच्यते॥भूतभावो
द्भवकरोविसर्गःकर्मसंज्ञितः॥३॥अधिभूतंक्षरोभा

वः पुरुषश्चाधिदैवतं ॥ अधियज्ञोहमेवात्र देहे देहभृ
तांवर ॥४॥ अंतकाले च मामेव स्मरन्मुक्त्वा कलेवरं ॥ यः
प्रयाति समद्भावं याति नास्त्यत्र संशयः ॥५॥ यंयंवापि
स्मरन्भावं त्यजत्यंते कलेवरं ॥ तंतमेवैति कौंतेय स
दा तद्भावभावितः ॥ तस्मात्सर्वेषु कालेषु मामनुस्मर
युध्य च ॥ मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥७॥

अभ्यासयोगयुक्तेनचेतसानान्यगामिना॥परमंपु
रुषंदिव्यंयातिपार्थानुचिंतयन्॥८॥कविंपुराण
मनुशासितारमणोरणीयांसमनुस्मरेद्यः॥सर्वस्य
धातारमचिंत्यरूपमादित्यवर्णंतमसःपरस्तात्॥ ९॥
प्रयाणकालेमनसाचलेनभक्त्यायुक्तोयोगबले
नचैव॥भ्रुवोर्मध्येप्राणमावेश्यसम्यक्सतंपरंपुरु

८ गी २

षमुपैतिदिव्यं॥१०॥ यदक्षरंवेदविदोवदंतिविशंति
यद्यतयोवीतरागाः॥ यदिच्छंतोब्रह्मचर्यंचरंतित
त्तेपदंसंग्रहेणप्रवक्ष्ये॥११॥ सर्वद्वाराणिसंयम्यम
नोहृदिनिरुध्यच॥ मूर्ध्न्याधायात्मनःप्राणमास्थितो
योगधारणां॥ ॐमित्येकाक्षरंब्रह्मव्याहरन्मामनु
स्मरन्॥ यःप्रयातित्यजन्देहंसयातिपरमांगतिं॥१३॥

अनन्यचेताःसततंयोमांस्मरतिनित्यशः।तस्याहं
सुलभःपार्थनित्ययुक्तस्ययोगिनः॥१४॥मामुपेत्यपु
नर्जन्मदुःखालयमशाश्वतं॥नाप्नुवंतिमहात्मानः
संसिद्धिंपरमांगताः॥१५॥आब्रह्मभुवनाल्लोकाःपु
नरावर्तिनोर्जुन॥मामुपेत्यतुकौंतेयपुनर्जन्मन
विद्यते॥१६॥सहस्रयुगपर्यंतमहर्यद्ब्रह्मणोविदुः

प
गी
३

रात्रिंयुगसहस्रांतांतेहोरात्रविदोजनाः ॥१७॥ अव्यक्ता
द्व्यक्तयःसर्वाःप्रभवंत्यहरागमे ॥ रात्र्यागमेप्रलीय
न्तेतत्रैवाव्यक्तसंज्ञके ॥१८॥ भूतग्रामःसएवायंभूत्वा
भूत्वाप्रलीयते ॥ रात्र्यागमेवशःपार्थप्रभवत्यहरा
गमे ॥१९॥ परस्तस्मात्तुभावोन्योव्यक्तोव्यक्तात्सनातनः ॥
यःससर्वेषुभूतेषुनश्यत्सुनविनश्यति ॥२०॥ अव्य

क्तोक्षरइत्युक्तःतमाहुःपरमांगतिं।यंप्राप्यननि
वर्तंतेतद्धामपरमंमम॥२१॥पुरुषःसपरःपार्थभ
क्त्यालभ्यस्त्वनन्यया।यस्यांतःस्थानिभूतानिये
नसर्वमिदंततम्॥२२॥यत्रकालेत्वनावृत्तिमावृ
त्तिंचैवयोगिनः।प्रयातायांतितंकालंवक्ष्यामिभ
रतर्षभ॥२३॥अग्निर्ज्योतिरहःशुक्लःषण्मासाउत्तरा

यणं तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः ॥२४॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनं । त
त्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥२५॥ शुक्ल
कृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्य
नावृत्तिमन्यया वर्तते पुनः ॥ नैते सृती पार्थ जानन्
योगी मुह्यति कश्चन । तस्मात्सर्वेषु कालेषु योगयु

क्तोभवार्जुन ॥२७॥ वेदेषुयज्ञेषुतपःसुचैवदानेषुय
त्पुण्यफलंप्रदिष्टं ॥ अत्येतितत्सर्वमिदंविदित्वायो
गीपरंस्थानमुपैतिचाद्यं ॥२८॥ इतिश्रीभगवद्गीता·
सूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जु·
नसंवादेऽक्षरब्रह्मनिर्देशनामाष्टमोध्यायः ॥८॥ ॥

श्रीभगवानुवाच ॥ ॐ इदंतुतेगुह्यतमंप्रवक्ष्याम्यन
सूयवे ॥ ज्ञानंविज्ञानसहितंयज्ज्ञात्वामोक्ष्यसेशुभा
त् ॥ राजविद्याराजगुह्यंपवित्रमिदमुत्तमं ॥ प्रत्यक्षा
वगमंधर्म्यंसुसुखंकर्तुमव्ययं ॥ २ ॥ अश्रद्दधानाःपु
रुषाधर्मस्यास्यपरंतप ॥ अप्राप्यमांनिवर्तंतेमृत्यु
संसारवर्त्मनि ॥ ३ ॥ मयाततमिदंसर्वंजगदव्यक्तमू

